


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

संपुटः ८ | 15 APRIL 1970 | क्रमांकः ४



साधारण चैत्रांकः ] शकवर्षः १८९२ [ मूल्यम् ४० पैसाः

# विषयसूची




# नवनत्संरस्तुतिः

सौमि साधारणं सकलजनधारणं
नववर्षमतुलप्रभावसंचारणम् ॥

कुजराजमिन्दुसेनेशसन्मन्त्रिणम्
सस्येशधान्येशगुरबुधाधिष्ठितम् ।
अर्घमेघेशचन्द्ररसेशसूर्यजम्
नीरसाधिपकुजं पशुपालयमकम् ॥ ॥ स्तौमि ॥

श्रीकृष्णपालिताखिलपशुगोष्टकम्
मन्दनामकपुरुषमकरसंक्रान्तिकम् ।
ग्रहणरहितं दुराग्रहभरितमनुजकम्
वक्रताशून्यनिर्वक्रवक्रांचितम् ॥ ॥ स्तौमि ॥

भीमरथीनदीपुष्करपरिष्कृतम्
भीमयुद्धोन्मादसूचिताशांतिकम् ।
अल्पवर्षानल्पवायुपीडायुतम्
चोररोगाद्युपद्रव विद्रुतप्रजम् ॥ ॥ स्तौमि ॥

# सम्पादकीयम्

गवां नियुद्धे वत्सानां पादभङ्गः

भारतीयं प्रजाप्रभुत्वम् घृतकोशातकीव संज्ञामात्रसारम् प्रथते। निर्वाचनवेलायां तु प्रजाः प्रभव इति लाल्यन्ते। तासां छत्रचामरान्दोलिकादयः एकदिनसुलतानस्येव समुपस्थिता भवन्ति। वन्दिमागधाः पुरतः पृष्ठतः पार्श्वतश्च कीर्तयन्ति ताः। तासां पदयोः अधः शुद्धवस्त्राणि प्रसारयेयुः स्वार्थपरायणाः। दोषारोपणप्रत्यारोपेण विमर्शप्रतिविमर्शसरण्या तासां बुद्धिं विकलयेयुः। ता भोजयेयुः पाययेयुः वासयेयुः पोषयेयुस्तोषयेयुः यथाशक्ति। कुत्रचित् कुत्रचित् बन्धुत्वेन शात्रवेण जात्या नीत्या अविनीत्या भूत्या प्रीत्या पादग्राहं चूडाग्राहं कण्ठग्राहं चुबुकग्राहं च गृहीताः प्रजाः दुरालोचनां दूरालोचनां च विहाय अर्थिसात्कुर्वन्ति आत्मसम्मतिम्। नूनं ता नायकेभ्यस्समर्पयन्ति आत्मजीवितम्।

केचिच्च जनाः तात्कालिकप्रयोजनकांक्षिणः विक्रीणन्ति आत्मसंमतिं धनेन अत्यल्पेन, अपरे च सप्रतिज्ञं धनं परिगृह्यापि स्वप्रतिज्ञां भञ्जयन्ति। विजिताः पराजिता वा प्रतिस्पर्धिनः आत्मवञ्चना मनुमीय संदेहविषयेषु यथाशक्ति अपकारोद्यता भवन्ति। एवं निर्वाचनरीतिः जनानां पुरतः कूपः-पृष्टतो गर्तं संपद्यते।

निर्वाचिता वा सकलप्रयत्नैः निर्वाचनक्षेत्राधिवासिनः उपेक्षन्ते।

नद्यां तीर्णायां नौकाया यादृशी प्रतिपत्तिः भवेत्तादृश्येव निर्वाचकानाम्। जनानां निर्वाचितदर्शनमेव दुर्लभं भवति।। यदि यथाकथञ्चित्ते दृष्टाः आविर्भूतस्वसंकटाश्च भवेयुः तथापि गजनिमीलिकाम्मालबन्ते ते। अथवा वाङ्मात्रेण तोषयन्ति अथवा अखिलभारतदृष्टिं विशालामावेश्य निर्दयं निराकुर्वन्ति। अथ त एव यदि मन्त्रिणस्समभवन् किं वक्तव्यं तेषां दर्शनमेव दुर्लभम् भवति।

ते च स्वार्थपरायणाः निर्लज्जाः निर्दयाः निर्वाचनवेलायां स्वकृतां प्रतिज्ञां जललिपिं विधाय अतिलाभदपक्षगवेषणतत्पराः प्रतिक्षणं परिवर्तयन्ति आत्मपक्षं वृद्धकृकलासा इव स्ववर्णम्। परस्परदूषणभाषणैः दोषारोपण-प्रत्यारोपणैः कालं नयन्ति। आत्मलाभपरायणाः स्वादर्शं स्वपक्षम् स्वदेशम् वा न गणयन्ति ते।

पालकानां परिस्थित्यामेतादृश्यां जनाश्च अन्तर्भेदविधुराः दुराशा-वशाः रन्ध्रान्वेषिणः प्रभुतां जनतां च पीडयन्ति। परदुःखे समुत्पन्ने आत्मानन्दमनुभवन्ति। नियोगीन उपाध्यायाः छात्राः कर्मचारिणः पृथक् पृथक् संयुक्ता वियुक्ताश्च अन्यैः संघशः संगम्य महान्ति अकार्याणि आचरन्ति यैः भारतमातुः शिरश्शूल उत्पद्यते। शिवसेना अछूतसेना इत्यादयस्सेना अपि उच्चावचानि अकार्याणि आरभन्ते। मुस्लिमाः क्रैस्तवाश्च यथाशक्ति संदर्भमाकलय्य संकटान्युत्पादयन्ति।

राजकीयनायकाश्च स्वार्थसंपादनाय मित्रामित्रविवेकहीनाः हिता-हितविमर्शशून्याः देशाहितपथेनैव प्रयान्ति। कदाचित् न्याय्यत्वेनोन्नीतं अन्यदा अन्याय्यत्वेन उद्घोष्यते। प्रजानां धनस्य मानस्य प्राणस्य वा

रक्षणावकाशो लेशोपि न दृश्यतेद्य । नित्यं भीताः नित्यं संशयमधिरूढाः कथंकथमपि कालं नयन्ति प्रजाः ।

अनाथानां जीवनगृहकल्पनव्याजेन परेषां जीवनं विध्वंस्यते परेषां गृहाणि निपात्यन्ते । अधिकोशानामाक्रमणेन, तत्संपत्तिविभजनेन क्षेत्राणां तथा करणेन न जाने अलसाः निरुद्यमा सुखिना भवेयुर्नवा, परन्तु उद्यमिनः उत्साहिनश्च नियतं अनुद्यमाः अनुत्सुकाश्च असुखाश्च भवेयुः नूनम् । एवम् बहुविधविरुद्धभावचर्यासंवलितानां नायकानां परस्परसंघर्षे अबोधाः यथोक्तग्राहिणो जनाः नष्टा भ्रष्टाश्च विषीदन्ति ।

वेतनवृद्धौ वस्तुमूल्यपरिवृद्धिः, मूल्यपरिवृद्धौ पुनर्वेतनवर्धनाकांक्षा इति विषचक्रे न कोपि नायकः स्वदृष्टिमर्पयति । आवश्यकवस्तुमूल्यस्तंभने च ईषदपि प्रयत्न आस्थीयते । कर्षकाणां क्षेत्रिणां कोपो भवेदिति केवल-मालोच्यते तैः न कोटिशः प्रजानां हाहाकारः आकर्ण्यते संस्थानावलयने कृतार्थानां तदधिपभृतिस्थगने बद्धपरिकराणां च एतेषां आहारवस्तुमूल्यस्य न्यूनीकरणयत्नः किं न क्रियते ? तत्रैकमेव कारणं द्योतते - बहुला नायकाः महाक्षेत्रिण एव, अतः स्वलाभं परित्यक्तुं ते नानुमन्वते । ते क्षेत्रिणां आयकरस्पर्शमपि न सहन्ते ।

अहो भारतप्रजास्वाम्ये प्रजानां दुर्दशा !



# पदार्थविज्ञानसारः

[पूर्वानुबन्धः]

शिष्यः - चन्द्रमाः पृथिवीतः कियद्दूरवर्ती ?

गुरुः - द्विशताधिकचत्वारिंशत्सहस्रक्रोशमानेनासौ पृथ्वीतो दूरवर्ती।

शिष्यः - वयं सर्वदा कथं चन्द्रं न पश्यामः ?

गुरुः - यदा पृथ्वीसूर्ययोर्मध्यदेशे चन्द्रः स्थितो भवति। तदा दीप्तिविहीनचन्द्रस्यार्धभागोस्माकं पुरोभागे तिष्ठत्। अतः कारणात् तदानीमस्माभिश्चन्द्रांशो नो दृश्यते। अथवा कदाचित् पृथिव्या अधोभागे चन्द्रमा याति। तेनाप्यदृश्यो भवति।

शिष्यः - किं तावद्ग्रहणम् ?

गुरुः - यस्मिन् काले चन्द्रमसश्छाया पृथिव्यां पतति। तदैव सूर्यग्रहणं भवतीति वयं ब्रूमः, यस्माच्चावरणीभूतेन चन्द्रेण तदा सूर्यदर्शनं न भवति। तादृशी क्षुद्रा महती वा चन्द्रस्य छाया तदनुरूपं क्षुद्रं बृहद्वा ग्रहणं भवति। यदा भुवश्छाया चन्द्रमसि पतति तदा चन्द्रोपरागो भवतीति।

शिष्यः - सूर्यग्रहणं कस्मिन् समये भवति ?

गुरुः - चन्द्रो यदा नवीनीभवति। अर्थाद्दर्शप्रतिपदोः सन्धौ तद्भवति।

शिष्यः - कदा चन्द्रग्रहणम् भवति ?

गुरुः - यदा चन्द्रमाः पूर्णो भवति, अर्थात् पूर्णिमाप्रतिपत्संधौ।

शिष्यः - चन्द्रः स्वयं प्रकाशहीनः, अतस्तस्माद्वयं किं किमपि फलं लभेमहि।

गुरुः - चन्द्रो हि सूर्यकिरणद्वारेणास्मभ्यं दीप्तिं ददाति । सा च दीप्तिर्महान्धकारमय्यां दीर्घतरायां निशायामतिसुखप्रदा महोपकारिणी च भवति । अत एव पश्यास्मान्प्रति परमेश्वरेणैतादृगनुग्रहः प्रकाशीकृतः, यतः सूर्यविरहितेपि काले चन्द्रतोस्माभिरालोको लभ्यते ।

शिष्यः - चन्द्रादस्माभिरन्यत् फलम् लभ्यते वा ?

गुरुः - आम् चन्द्रसूर्याभ्यां समुद्रस्य वृद्धिह्रासौ भवतः, ताभ्यां च सामुद्रजलं निर्मलं भवति । एवं बृहन्नौकोपजीविनां लोकानां महानुपकारो जायते ।

शिष्यः - चन्द्रमण्डलमध्ये कश्चिल्लोको विद्यते वा ?

गुरुः - तन्मध्ये कश्चिल्लोको विद्यत इति विद्वद्भिरभिधीयते । एवमियं पृथ्वी तल्लोकस्य चन्द्रमा भवति, यतः चन्द्रस्य निष्प्रभार्धभागो वसुधया देदीप्यमानो भवति । चन्द्रे नवीने सति स च सदैव दृष्टो भवति । परन्तु ग्रीष्मकालतः शीतसमयेधिकं दृश्यते ।

शिष्यः - यथा चन्द्रोस्मान्प्रति प्रकाशते तथा चन्द्रं प्रति पृथिवी प्रकाशते वा ?

गुरुः - आम् । त्रयोदशगुणेनाधिकं प्रकाशते । पूर्णचन्द्रापेक्षया त्रयोदशगुणेन दीप्तौ प्रकाशमानायां कीदृगाश्चर्यं दृष्टं स्यात् । यदास्मान्प्रति चन्द्रः संपूर्णो भवति तदेयं पृथिवी चन्द्रलोकतो न दृश्यते । यदा च तल्लोकं प्रति पृथिवी संपूर्णा दृष्टा स्यात् तदा प्रकाशहीने चन्द्रे तस्मादस्माभिः किमपि फलम् न प्राप्यते ।

शिष्यः - चन्द्रबिम्बे कलंकाकारेण यत् दृश्यते तत् किं ?

गुरुः - ते सर्वे पर्वता इत्यनुमीयन्ते । चन्द्रस्य प्रभाविहीनो देशः समुद्र इति पूर्वेषामनुमानम् । इदानीन्तनैर्धीमद्भिः शैलानां गुहा वा

उपत्यका वेत्यनुमीयते, याश्च सूर्यरश्मिभिर्न प्रकाश्यन्ते ।

शिष्यः - यदि तारागणः सूर्येण सदृशः, यदि च सूर्यवत्तेषां ग्रहाश्च वर्तन्ते तदा भवान् किमनुमाति तेषां मध्ये कश्चिल्लोको विद्यते ।

गुरुः - आम् वर्तते । तत्र मे संदेहलेशो नास्तीति बोधोयं प्रमा । यथा जन्तूनां मध्ये नानाविधाश्चर्यजन्तवः तथा अस्माकमनुमानं भवति यदेतेषां सृष्टानां मध्येपि मनुष्यवन्नानाकाराः प्राणिनः संति ।

शिष्यः - धूमकेतुगण किमग्निमय किमपि वस्तु ?

गुरुः - नैवम् । किन्तु दिनकरकिरणजालैः प्रकाशमानो भवति । तेषां दीर्घतरज्योतिर्मयलांगूलेनास्माभिरनुमीयते ।

शिष्यः - तत्किमग्निमयम् ?

गुरुः - न । किन्त्विदमस्माभिरनुमीयते । तच्च धूमकेतोः स्थिरवायुः यत्र सूर्यरश्मयो लगन्ति ।

शिष्यः - सर्वग्रहापेक्षया धूमकेतुः किं सूर्यदतिदूरवर्ती न ?

गुरुः - तत्सत्यम् । तेनास्माभिर्बुध्यते । यतश्चाकाशोऽपरिमितविस्तारः अष्टपञ्चाशदधिकसप्तशताधिकसहस्रमितजावनिकाब्दे धूमकेतौ दृष्टे सति निश्चितमिदमासीत् पञ्चसप्ततिवत्सरैरसौ धूमकेतुर्वारमेकमर्कं वेष्टयति । एवमशीत्यधिकषट्शतोत्तरसहस्रमितजावनिकाब्दे धूमकेतौ दृष्टे सति निश्चितमिदमभूत् पचसप्तत्युत्तरपंचशतवत्सरैर्वारमेकं स धूमकेतुरर्कं वेष्टयति । धूमकेतूनां सूर्यवेष्टनवर्त्मानेन प्रकारेण निश्चीयते यत् धूमकेतौ दृष्टे सति कतिपयवत्सरानन्तरं पुनर्धूमकेतुर्दृष्टो भविष्यतीति सुधीभिर्वक्तुं शक्यते ।

शिष्यः - धूमकेतूनां कश्चिल्लोकोऽस्ति वा ?

गुरुः - अनुमानेन तथा भवितुमर्हति । किन्तु निस्संशयं वक्तुं न शक्यते । यदि तेषां लोकास्सन्ति तदा येषां लोकानां विषयान् वयं श्रुतवन्तः, तेभ्यो लोकेभ्यस्ते विशिष्टा भविष्यन्ति । ग्रहेभ्यो दीप्तिं तापं च वितरतः सूर्यस्य रश्मयः क्षीणा भवन्ति । तस्मादेव धूमकेतुगणः सूर्यमण्डले पतति । तेन च सूर्यस्य दीप्तितापश्च वृद्धिं यातीति केचित् पण्डिता वदन्ति ।

शिष्यः - उदिते धूमकेतौ किमहो जगतामुत्पाता भवन्ति ।

गुरुः - नैवम् । तस्मिन्नुदिते केचिद्भयाकुला भवन्ति, बुध्यन्ते च लोकानां भविष्यति महानुपद्रव इति । किन्तु धूमकेतोर्नोपद्रव-हेतुः यतस्तस्योदये न हि मारीभयविग्रहदुर्भिक्षाणि केवलं भवन्ति । परन्तु संधिक्षांतिसुभिक्षादयोपि भवन्ति ।

शिष्यः - नक्षत्राणां यत्पतनं दृश्यते तत् किम् ?

गुरुः - न हि नक्षत्रस्य पतनं, किन्तु यस्य कस्यचिद्वस्तुनो ये बाष्पाः सूर्यतापैराकाशमण्डले चोत्तिष्ठन्ति तेषां मध्ये ये स्फुलिंगाः प्रविशन्ति, ते ज्वलित्वा यावद्दग्धा न भवन्ति तावत्ते तथा दृश्यन्ते ।

शिष्यः - रात्रौ क्वचित् क्वचिदालेयेति लोकप्रसिद्धमग्निमयं यद्दृष्टं भवति तत् किं वस्तु ?

गुरुः - अनुमीयते तच्च वायुविशेषः यस्मिन्नग्निसंबन्धो वर्तते । किं वा मृतवृक्षशुष्कपर्णेभ्यो निर्गतं किमपि स्नेहवस्तु यस्मिन्नुत्पन्ना इवाग्निस्फुलिंगास्तदाकारेण ज्वलन्ति ।

शिष्यः - नभस्युल्कापातो यद्दृश्यते तत् किं ?

गुरुः - तच्च बाष्पमयं किमपि वस्तु, यस्मिन् प्रविष्टे स्फुलिंगे सति प्रज्वलति ।

(सशेषः)

# संस्कृतस्योज्वल भवितव्यम्

ले० वैद्यश्री रामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम्, बम्बई ७७

मदीयेष्टदेवि ! ज्ञानविज्ञाननिधाने ! संस्कृतभारति ! आसीः कृपावती त्वं सुरलोकाद् अवतीर्य भारतमेदिनीम् । इहैव सर्वतः प्राक् ज्ञानामृताब्धेस्तव वीणायाः मधुरः संस्कृतः क्वाणः आर्यभारतीयानां श्रवणविवरं प्रविश्य प्रासरत् आलोकाय जनानां लोकानुलोकम् । ननु आसीः त्वमेव वाल्मीकिव्यासपराशरकालिदासभारविभवभूतिदण्डिभासबाणभट्टमाघमयूरश्रीहर्षभोजविक्रमादीनां महाकवीनामिष्टदेवता भारतेऽस्मिन् । ये च तव प्रसादात् ।

स्वप्रजया कुञ्चिकयेव कोषमुद्घाट्य ज्ञानाभरणं प्रयत्नात् ।
शुचीनि कवितामाल्यानि कृत्वालंकृत्य भुवनं प्रापुः प्रतिष्ठाम् ॥

कथं मलिनायतेऽधुना शारदे ! तव संस्कृतं भाषितम् । क्व गतः स कालः, यत्र सम्राजोऽपि तव चरणयोः नतास्ते व्याहृतं संस्कृतं हठात् प्रचारयन्तः सडिमडिमघोषम् —

विप्रोऽपि यो भवेन्मूर्खः स पुराद् बहिरस्तु ते ।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम ॥

इति लोकान् अन्वशासन । आसन् पुरा देशेऽस्माकं शीलाविज्ञामारुलामोरिकाद्याः काव्यं कर्तुं समर्थाः विज्ञाः स्त्रियोऽपि ।

क्व गतास्ते दिवसा देवि भारति ! तव भारतस्य यदाऽत्र गुरूणां गृहे पठतश्छात्रान् पञ्जरस्थाः श्रुतधराः शुकाः सारिकाश्च प्रतिबबन्धुः ।

जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्तिभिः शुकैः ।
निगृह्यमाणा वटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः ॥

पुरा भारते बहूनामपि राज्यानां, 'संस्कृतम्' एकमेव मिथो व्याहारभाषितमासीत् । पुरातनानामार्याणाम् 'संस्कृतम्' व्यवहारभाषा आसीत् इति को न जानाति व्यवहारविशेषज्ञः, यावत् पारेसमुद्रमासीत् तदानीं संस्कृतस्य प्रचुरः प्रचारः । राजानः पण्डिताः पुरोहिता वैद्याः मन्त्रिणः प्राड्विवाकाश्च सुखेन संस्कृतं व्याजह्रुः । विदेशेभ्यः समागताः सर्वेऽपि यात्रिणः संस्कृतेनैव वाग्व्यवहारेण कार्याणि चक्रुः । कवयो राजनीतिविदः धार्मशास्त्रिणश्च संस्कृतमेव लिलिखुः बभाषिरे च । संस्कृतमखिलस्य देशस्य सम्माननीयानां जनानां सम्पर्कभाषितमासीत् । उदीचामार्याणां दक्षिणभारतीयानां च मिथो वाग्व्यवहाराः संस्कृते एवाऽभूवन् ।

महाभारतकालेऽपि 'संस्कृतम्' राज्ञां कवीनां पण्डितानां शिष्टवर्गस्य च भाषाऽसीत् । रामायणस्य कालेऽपि राज्ञां द्विजानां विदुषां शिष्टानां च संस्कृते एव मिथो व्यवहारा अभूवन् । यथेदं तत्राशोकवाटिकां प्रविष्टस्य हनूमतो वचनं रामायणे –

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥

पुरातने भारते संस्कृतं राजभाषा आसीत । संस्कृतपंडिता एवाभूवन राजपुरुषाः सचिवाः सेनापतयः पुरोहिता वैद्याश्चापि । राजसभासु कवयः संस्कृतकाव्यानि अपठन् । राजानः पण्डितेभ्यः आश्रयं प्रायच्छन् । संस्कृतप्रचाराय ते गुरुकुलेभ्यः मठेभ्यः विहारेभ्यः पाठशालाभ्यश्चाग्रहारान् प्रददुः । भोजो विक्रमः श्रीहर्षश्चेत्यादयो बहवो विद्वांसो राजानः संस्कृतपण्डितानामाश्रयाः अभूवन् । यथेह पूर्वजनी सुप्रसिद्धिः –

धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥

उपलब्धाः सन्ति तदानीन्तनानां पण्डितानां कृतयः काव्यानि च कवीनाम् । यावने कालेऽपि संस्कृतस्य संस्कृतपण्डितानां च गौरवमासीत् । तदानीमपि वेदसाहित्यदर्शनज्योतिषव्याकरणायुर्वेदादीनां विषयाणां पण्डितराजजगन्नाथाप्ययदीक्षितभास्कररायशेषकृष्णजगद्धरभट्टरत्नकण्ठभास्करकण्ठभावमिश्रशार्ङ्गधरविश्वनाथादयो महान्तो विद्वांसः ग्रन्थकर्तारश्चासन् ।

प्रेरयसि किं देवि! सरस्वति! तव भक्तानां मनांसि संस्कृतप्रचारार्थम् । येन संस्कृतस्य नाम्ना जीवन्तोऽपीदानीमन्तःसारविहीनाः हीनाः वैद्याः ज्योतिर्विदः पुरोहिताश्च भविष्यन्ति सम्यगधीत्य स्वविषयान् –

वैद्यराज! नमस्तुभ्यं यमराजसहोदर ।
यमस्तु हरति प्राणान् त्वं तु प्राणान् धनानि च ॥
गणयति गगने गणकः चन्द्रेण समागमं विशाखायाः ।
विविधभुजङ्गमक्रीडासक्तां गृहिणीं न जानाति ॥
पुरीषस्य च रोषस्य हिंसायाः तस्करस्य च ।
आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥

इतीत्थं जनानामुपहासवचनानि गालिप्रदानं च पदे पदे न सहेरन् ।

उद्धर दोषान् देवि! इदानीन्तनानामध्यापकानाम् । येन ते स्वकर्तव्येऽलसा दुर्बला अनभिज्ञाश्च न भवेयुः । ते स्वपुत्रान् शिष्यान् वा समानेन श्रमेण पाठयेयुः कयाचित् चमत्कारकारिण्या सरलया मनोरमया प्रणाल्या सव्याकरणं संस्कृतम् ।

कृपयस्व देवि! सरस्वति! शिक्षाविभागाधिकारिणां मनांसि समावर्जयितुम्। ये च स्वयं संस्कृताभिमानिनो भूत्वा राष्ट्रहिताय लोकोन्नतये च संस्कृतज्ञान् निर्माय निर्वहेयुः सम्यक् स्वाधिकारम्।

भारतं खलु गणितस्य विज्ञानस्य च जन्मस्थानं सर्वासां च सुसंस्कृतीनाम्। मुनयः सूत्रप्रणाल्या अध्यापयन्ति स्म। तस्यां च तेषां तेषां विषयाणां ग्रन्था अधुनापि भोजपत्रेषु लिखिता जयशलमेरीयपुस्तकालये बडौदापुस्तकालये च काचपेटिकायां निहिता दूराद् दर्शनाय उपलब्धाः सन्ति। पुरा संस्कृतं सर्वासां ज्ञानशाखानां शिक्षामाध्यममासीत्। अखण्डे भारते पुरा प्रान्तीयताया अभावात्संस्कृतमेव प्रान्तान्तराणामासीत् भाषितमाध्यमम्। ज्ञानविज्ञानविद्यानां कलानां च साधीयसी संक्षिप्ता सरला च सूत्रप्रणाली पुनरपि प्रचालनीयाऽधुना शिक्षाक्षेत्रेष्वधिकारिभिः। भारतभूमौ संजातजनानां जनानां कृते विदेशभूमिसंभवं शिक्षणं सर्वथाऽपथ्यम् इति विदां कुर्वन्तु ते तथ्यम्।

परप्रत्ययनेयबुद्धयोऽस्माका विमूढाः स्खलितान्यनुभूयापि पुनः परिभ्रान्ताः स्वकीयतां निवर्तिष्यन्ते स्थास्यन्ति च स्वकीयमुच्चैः स्थानम्। देशस्य बहवो विश्वविद्यालयाः शिक्षायाः माध्यमं प्रदेशभाषां हिन्दीं वाऽकुर्वन्, अन्ये चताननुयास्यन्तीति संस्कृतप्रचुरा अङ्गवङ्गकलिङ्गहिन्दीगुर्जरीकेरलीतैलङ्गीमहाराष्ट्रीप्रभृतयो भाषाः संस्कृतं शरणमायास्यन्ति स्वकोषं माहित्यं च परिवर्धयितुम्। शालासु संस्कृतमवश्यपाठ्यम् भविष्यति। सर्वेऽपि भारतीयाश्छात्राः पठिष्यन्ति संस्कृतम्। तेषु केचिद् विद्वांसोऽपि भूत्वाऽलंकरिष्यन्ति लोकतन्त्रस्य स्वदेशस्य सुयोग्याः शासनासनमिति विश्वासोऽस्माकम्।

भारतमन्ततो गत्वा भारतमेव भविष्यति। 'संस्कृतम्' सर्वेषां व्याहृतानामुच्चस्थानम्, भारतीयज्ञानविज्ञानशास्त्रजातकलकलापविद्या-

विभेदानां च परस्परासमागतं शिक्षामाध्यमं पुनरपि स्वस्थाने स्थास्यति। विरोधिनां शासनसमयेऽपि स्ववीर्यगुप्तमासीत् संस्कृतम्। इदानीं स्वतन्त्रे भारते तु स्वैः गुणैरेव लप्स्यते तत् पूजास्थानम्। संस्कृतविद्या वर्धिष्यन्ते, दुर्बलसंस्कृताः संस्कृतवर्जिताश्च न जीविष्यन्ति, दुःखेन वा जीविष्यन्ति। संस्कृतस्य विरोधिनः सूर्योदयेऽन्धकार इव प्रणंक्ष्यन्ति। दिव्या भव्या निःशेषव्यवहारसंजीविनी प्राज्ञेतरपरिच्छेदविधायिनी संस्कृतभाषा सर्वोदयविधायिनी सर्वसंजीविनी भारतीया संस्कृतिश्च नचिरादेव पुनरुदेष्यतीति प्रतीतिरस्माकम्।

संस्कृतं स्थास्यति मूर्ध्नि भवता पूजितं गुणैः।
इति मत्वा न शोचेयुः संस्कृतं संस्कृताः जनाः॥

---

# कोविदपरीक्षां

उत्तीर्य

संस्कृतपंडितपदवीं निर्वहत !

एतत्सभीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्वयोग्या अंगीकृता। अतः तत्र उत्तीर्य पंडिता भवत।

इति

ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.



# राजाजीकथा ४८



## तितलिका - कीटकम्

**लेखकः – आ० वरदराजः**

तितलिका काचित (सीताकोकचिलुक) नन्दनवने द्रुमात् द्रुम-मुत्पतन्ती पुष्पाण्यधिश्रित्य मधुरं मधु-स्वादमनुभवन्ती महता संतोषेण कालं यापयति स्म। कदाचित् सा पत्रलग्नं कीटकं कश्चिद्ददर्श; जहास च।

  

"क्षुद्र कीटक! ननु त्वमपि किल प्राणी सन् जीवसि; किं न लज्जसे?" इत्यवहेलितं तितलिकया।

"निर्भरो निर्भयोऽस्मि; चिन्ता नाऽस्ति किल तेषाम्, ये केचा-स्मत्कुले जाताः, ये वा मादृशरूपिणः" इत्याह कीटकम्।

"तव किमपि न ज्ञातम्, पश्य तावत् कथमह मुत्पतामि! विना पक्षैः त्वं पत्र-लग्नं सत् क्लेशेन मन्दं मन्दं सर्पसि। एतादृशं निकृष्ट-जीवितं अनुभवन्नपि त्वं संतृप्तोऽसि। त्वादृशः क्षुद्रजन्तु र्नदृष्टचरो मे" इति जजल्प तितलिका।

"अयि! त्वमपि खलु कतिपयदिनेभ्यः प्राक् कीटावस्था-मनुभवन्त्यासीः; किं तन्नस्मर्यते" इति तितलिकां आलोक्य प्रतिवदति स्म चटकः कश्चित्।

"अलं मृषा-भाषणेन; क्वाऽहं क्व च कीटावस्था ? नाऽहं कदाऽपि कीटकमासम् । सर्वदा एवमेव आसम्, अस्मि, अस्मि तावत्" इति सुदृढं भणितं तितलिकया ।

★ ★ ★

एवमुक्त्वा सा स्वपहचरेण सह खमुत्पत्य द्रुतं गता ।

कतिपयदिवसैः तितलिका गर्भिणी जाता । समीचीनं स्थलं दृष्ट्वा व्यसृजदण्डानि । याव त्तानि निर्भिलानि तावत्कुतूहलेन, भाविनीं संतर्ति संभाव्य परमप्रमोदेन च प्रतीक्षमाणा आसीत् ।

एवं स्थिते कस्मिश्चिद्दिने अण्डानि निर्भीलानि ।

★ ★ ★

"अय्यो ! किमिदं अन्याय्यम् ? सर्वाण्यपि कीटकानि निर्गतानि ! मम गर्भात् कथं कीटकानि निस्सृतानि ? मादृशैः किल मदपत्यैर्भाव्यम् । कोऽयमभिशापः ?" इति तितलिका रुरोद सुस्वरम् ।

"ननु तस्मिन्न दिने त्वया तत्कीटकं प्रति सहेलनं सावमानं किल भाषितम् ; बहुशः तेन शप्तम् स्यात्" इत्याह तितलिकायाः पुमान् ।

"नहि नहि; तत्कीटकं महत् साधु ! न तेन शप्तम् स्यात्" इति प्रत्याह तितलिका । किंचिदिव तूष्णीं भूत्वा पुनः प्राह सा "न जाने किमिति; मम पुनरिदानीं कीटकानि नूनं वात्सल्य-पिट्कानि जातानि; न यथापूर्वम्" इति ।

"हंहो ! चेतः प्रकृतिः !! ममाप्येवमेवास्ति" इत्याह तत्पुमान् ।

★ ★ ★

व्यतीतेषु पुनः कतिपयेषु दिनेषु, तानि सर्वाण्यपि कीटकानि परिणतानि; परिवर्तितानि च रूपान्तरे। पक्षैः प्ररूढैः तानि इतस्ततः किंचित् किंचित् उत्पतितुमारेभिरे।

"अहो! ते सौभाग्यम्! पश्येमानि तव जातानि" इत्युच्चैरवोच चटकः। "सर्वाण्यपि कीटकानि मम जातानि, मादृशान्यासन्। कथमिदम् चित्रम्!! एवमपि संभाव्यते" इति परिपप्रच्छ तितलिका।

माता शिशून् सानन्दं विलोक्य ससंभ्रमं प्राह "वत्साः! यूयम् कीटकान्यासन्!! किं तत्स्मर्यते? इदानीं मादृशाः संवृत्ताः; महान् संतोषः" इति।

इदं सर्वं न विदित तदपत्यानां मातरमपि अविगणय्य तानि सर्वाणि तत उत्पतितानि क्वाप्यन्त्र गन्तुम्। तान्यपि पुष्पेभ्यः मधुस्वादाय प्रवृत्तानि। न मातरं गणयन्ति न वा पितरम्।

  

"लोकोऽयं पापिष्ठः; अपत्यानां प्रसवेन महद्गौरवस्थानम् मातृदैवमपि न संभाव्यते उचितरीत्या" इति सनिर्वेदमाह तितलिकायाः पुमान्।

"भोः! आमेव मेवैतत् :- "अस्तु नाम। निद्राऽयाति। वयं नेत्रे निमील्य जोषंभावं भजाम" इति साश्वासं प्राह तितलिका।

उभावपि यथावस्थितं तत्रैव निद्रामुद्रितौ। सुखं निद्रितौ; पुनः न जागृतौ। नूनं तौ पुनर्जागृतिं विना चिरनिद्रामुद्रितौ।

  

"राजा, राज्ञी वेषधारणेन नाटकेषु अभिनयन्ति किल, तद्वदेव कीटकान्यपि कतिचिद्दिनानि उत्पतन्तीव अभिनयन्ति; ततश्च चिरं सुखं निद्रान्ति। निद्रितानि चेत् तानि पुन नेजाग्रति। अकिंचना अकिंचज्ञाः ते प्राणिनः नूनं भगवत्सन्निधिमेव निर्निरोधं निराबाटं प्राप्नुवन्ति।

कतिचन निर्धनाः अदृष्टवशात् धनिनो भवन्ति। तेषामपि कतिचित् स्वीयं प्राग्वृत्तम् विस्मृत्य सगर्वं प्रवर्तन्ते। तादृशपरिस्थितेः कीटवृत्तान्तः उपमानतया कथ्यते। कीटकानि किल स्वस्वरूपं प्राचीनम् विस्मृत्य मध्ये प्राप्तेन रूपधेय-भागधेयेन बअलिप्तानि भवन्ति; न तेषां पदानि क्षणमात्रमपि भुवि तिष्ठन्ति। उत्पत्योत्पत्य किल गच्छन्ति। एवमेव तेऽपि जनाः प्राक् निर्धनास्सन्तोऽपि कालान्तरे धनिनो भूत्वा पूर्वस्थितिं विस्मृत्य निर्दयं सगर्वं प्रवर्तन्ते। तत्तु न शोभनम्; न श्रेयसे।

किंच; कीटकानि विस्मृतपूर्ववृत्तानि इति तु सत्यम्; परन्तु एते मानवाः पुनः अप्रच्युत पूर्वसंस्कारमनोरथाः, अविस्मृतपूर्ववृत्तान्ता एव तथा चरन्ति यथा ते न तथाभूताः - इतीदमेव चिन्तनीयम्। कीटकानि निर्द्रितुं चेत् प्रवर्तन्ते तर्हि सुखं, चिरं अपुनर्जागृति निद्रान्ति। मानवानां तु न निद्रायाः नामाऽपि सुखनिद्रायास्तु का कथा? अतो मानवजीवितमेव परमशोचनीयम्।

  

पूर्वस्थितिं चेद्विस्मर्ता स्याद्गरिष्ठो नरो भुवि।
पूर्वस्थितेश्च संस्मर्ता स्याद्विनम्रो नरो भुवि॥



## ॥ रामाय तस्मै नमः ॥

पुंदेहं धरते, वनं गतवते, मायामृगं हिंसते ।
वैदेह्या च विनाकृताय, दहते छिन्नं प्रियं पक्षिणम् ॥
पत्नीं मार्गयते, तदा सुभगतो वायोः सुतं विन्दते ।
सुग्रीवस्य सहायतां विदधते, वालिं खलं जघ्नुषे ॥

सेतुं कारयते; स्वसैन्यसहितं वार्धिं समुल्लङ्घते ।
लङ्कां पातयते, जगद्धितकृते, रक्षोविनाशं कृते ॥
पौलस्त्यं जयते च राज्यमखिलं तद्बन्धवे यच्छते ।
सीतां मोचयते, महाकृतिकृते, रामाय तस्मै नमः ॥

या. वि. देकासकरः
वटपत्तनस्थः

श्रीमात्रे नमः

# श्रीमज्जगद्गुरु शङ्करभगवत्पादाचार्यकृत

# सांख्यसूत्राणि

गोल्लापिन्नि वासुदेवशास्त्रि सम्पादितानि

आम्नाय वाचा मतिदूरमाद्यम्
वेद्यं स्वसंवेद्य गुणानुरूपम् ।
आत्मान मव्यक्त मनन्तरूपम्
पश्यन्ति तारात्मक मात्मनिष्ठाः ॥

सत्यं वेद विवर्जितं श्रुतिगिरामाद्यं जगत्कारणम्
व्याप्तं स्थावर जङ्गमं निरुपमं चैतन्यमन्तर्गतम् ।
आत्मानं रविचन्द्रवह्निवपुषं तारात्मकं संततम्
नित्यानन्द सुखाकृतिं सुकृतिनः पश्यन्ति रन्ध्रेध्रियम् ॥

हृदि स्थितं पङ्कजमष्टपत्रम्
सकेसरं कर्णिक मध्यनीलम् ।
अङ्गुष्ठमात्रं मुनयो वदन्ति
ध्यायन्ति विष्णु पुरुषं पुराणम् ॥

हृदि विकसितपद्मं सार्कसोमाग्निबिम्बम्
प्रणवमय विकासं यस्य पीठं प्रकल्प्य ।
अचलपरमसूक्ष्मं ज्योतिरध्यात्मसारे!
स भवतु मनसो मे वासुदेवः प्रतिष्ठः ॥

## निर्गुणाष्टांगयोगाः

देहेन्द्रियादौ वैराग्यं यम इत्युच्यते बुधैः ।
अनुरक्तिः परे तत्वे नियमः परिकीर्तितः ॥

सर्ववस्तुन्युदासीना बुद्धिरासनमात्मनः ।
जगत्सर्वमिदं मिथ्याप्रतीतिः प्राणसंयमः ॥

चित्तस्यान्तर्मुखीभावः प्रत्याहारो निगद्यते ।
सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ॥

चित्तस्य निश्चलो भावो धारणाऽसौ निगद्यते ।
ध्यानस्य विस्मृतिस्सम्यक्समाधि रभिधीयते ॥

एवं निर्गुणमष्टांगं योगी य स्सम्यगभ्यसेत् ।
पूर्णबोधस्वरूपत्वं याति नास्त्यत्र संशयः ॥

## योगिविहित पंचमहायज्ञाः

विचार मनन ध्यान ज्ञानरूप समाधिकान ।
कुर्यात्पंच महायज्ञान् नित्यं ब्राह्मण्यसिद्धये ॥

## अथ सांख्यविचारः

ज्ञानकर्मेन्द्रियाणि दश, विषयपञ्चकम् , वायवः पञ्च, अन्तःकरण-चतुष्टयम् । इमानि चतुर्विंशति तत्वानि । अस्यैव प्रकृतिक्षेत्रनामानि, अस्यैव रक्तश्वेतनील सुनील संज्ञकानि चतुर्वर्णानि ।

एतन्मध्ये प्रकाशमाना कणिकारूपा शिखा सैवाक्षरः पुरुषः, तस्यैव तपोज्योतिरिति संज्ञा । अन्तर्मुद्रे च, परास्थानमिति च, नीवारशूक-मिति च, तदेव नीललोहितमध्यस्थेतिश्रुत्युक्तान्तर्लक्ष्यस्थानम् , एतामेव

विद्युल्लेखेति, अग्निशिखेति, सर्वसाक्षीति, अन्तर्मुखेति, सर्वकारणभूत चिन्मयविरूपाक्षस्थानमिति, सत्यलोकमिति, कैलासवैकुण्ठस्थानमिति नेत्रस्थानमिति, यद्यत्तदुपनिषत्संज्ञा ।

अथ पञ्चविंशतितत्वानां देवता निरूप्यन्ते

चन्द्रबृहस्पतिक्षेत्रज्ञ रुद्राः मनोमुखान्तःकरण चतुष्टयाधिपाः। दिग्वायुसूर्यवरुण नासत्याः श्रोत्रादि ज्ञानेन्द्रियाधिपाः, अग्नीन्द्र विष्णु-प्रजापति मृत्यवः कर्मेन्द्रियाधिपाः । इमे लयावसरे अतिसूक्ष्मतया वट-बीजवदवस्थिते सर्वकारणभूते चाक्षुषे सूक्ष्मरन्ध्रे विलीना भूत्वांगुष्ठमात्र-पुरुषं स्मृत्वा सूक्ष्मरूपाः तिष्ठन्ति । इदमेव सांख्यसूत्रमापरोक्षकम् ।

क्षराक्षरविचारः

योक्षर इति प्रागुक्तस्स एव जीवः, क्षरं मनः, यद्वा क्षरमङ्गं, अक्षर एवाष्टलिंगाकृतिः परमः ।

अथ तारकप्रकारः

स्थूलगोळकृष्ण श्यामगतं कृष्णवर्णमेवाग्निमण्डलम्, तदुपरि दृश्यमाने नीलसुनीले सूर्यचन्द्रमण्डले, तत्रैव षोडशकलात्मकस्य लिङ्ग-देहस्थितिः । एतन्मध्यगतान्तर्लक्ष्यत्वेन श्रुतिसम्मनम्, विद्युल्लेखेव प्रकाश-मानाखिल दृग्दृश्यात्मिका चित्स्वरूपा शिखैवान्तःखेचरी । इदमेवा-मनस्कविधानमाहुः ।

अथ जीवेश्वर तत्वष्टकम्

रक्तश्वेतकृष्णनील संज्ञिकानि चतुर्वर्णानि, स्थूलसूक्ष्मकारण

महाकारण संज्ञकानि, विश्वतैजसप्राज्ञ शुद्धात्माधिष्ठानभूतानि, जाग्रत् स्वप्नसुषिप्ति तुर्यावस्थाश्रयभूतानि, अकार उकार मकारार्थमात्राणि, व्याख्यानभूतवैखरी मध्यमा पश्यन्ती परावाक्संज्ञिकचतुष्टयसंज्ञकानि, अन्नमयादि चतुष्कोशाभिधेयानि, त्वं पदार्थः ।

एष्वन्तर्गतिकानि पीतकर्बुरश्याम सुनीलवर्णानि,
विराड्ढिरण्यगर्भाऽव्याकृतस्वराट्स्थानानि,
सृजनादिचतुष्कार्यकारणानि तत्पदार्थः
एतन्मध्यगशिखास्थानमेवासिपदार्थः ॥

अथान्तर्लक्ष्ये भासमान पंचतनु स्वरूपपांचभौतिक वर्णप्रमाणानि, रक्तश्वेतकृष्णधूम्रनीलवर्णानि पृथिव्यादीनि, अङ्गुष्ठ पर्वसार्धांगुष्टपर्व तदर्थमसूरमात्रप्रमाणातीतानि, क्रियाज्ञानेच्छादि पराशक्त्यधिष्टानानि, वैखर्यादि पञ्चनादान्वितानि, ल व र य हाख्याक्षरोपेतानि, अहंकाराद्यन्तःकरणपंचपीठाधिष्ठानानि, त्रिकूटहठगोल्लाटगोठौठब्रह्मरन्ध्र पीठाभिधानानि, नेत्रनाभिहृदयकण्ठमूर्ध संज्ञकानि, ब्रह्मविष्णुरुद्रेश्वरसदाशिवदैवतानि, जाग्रदादि पंचावस्थानानि, सद्योजातादि पंचमुखाधिष्ठानानि, तारकदण्डककुण्डलार्ध चन्द्रक बिन्द्वभिधेयानि विज्ञेयानि ।

अथ नादबिन्दुकलाः

गङ्गैव बिन्दुः, सरस्वत्यैवनादः, शिखामध्यगतांगुष्ठ प्रमाण पुरुष एव कलास्वरूपः ।

अथ षट्चक्राणि

पृथिव्यादि पंचभूतस्थलानि, तारकादिबिन्द्वन्तानि, आधारादि विशुद्धान्तस्वरूपाणि, बिन्दुशिखा मध्यमभाग एव आग्नेयचक्रम् ।

## इमान्येव स्थलानि

भक्तमहेश्वरप्रसाद प्राणलिङ्ग शरणैक्यस्थलानि, तान्येवाचार गुरुशिवजंगमप्रसादसंज्ञिकलिङ्गस्थानानि, लवणतिक्तकट्वाम्लमधुरविषम-हदहङ्काराख्याष्ट प्रकृतिस्थानानि, अथवा भूम्युदकाग्निवाय्वाकाश मनो-बुद्ध्यहङ्काराख्याष्ट प्रकृति संज्ञिकानि।

## अथ लिङ्गशरीरम्

ज्ञानेन्द्रिय कर्मेन्द्रियदशकं, विषकपंचकं, मन एकं मिळित्वा, लिङ्गशरीरं, तत्र वर्णानि; त्वग्गौरी, चक्षुः कृष्णम्, श्रुतिःपीता, जिह्वा रक्ताः, घ्राणंश्वेतम्, वाक् नीला, पाणीहरिद्रा, पादश्श्यामः, पायूरक्तः, उपस्थःकर्बुरः, शब्दस्फटिकः, स्पर्शोधूम्रः, रसस्ताम्रः, गन्धश्श्वेतः, मनः पीतम्, ज्ञाताविद्युन्निभः, एतादृक्षोडशकळायुतमेव लिङ्गाङ्गम्।

## अथ सच्चिदानन्दः

तादृङ्निश्चयकारिणी कळैव चित्। तदुभयसम्मेळनासु देवानन्दः सत्यंज्ञानमनन्तं ब्रह्मेति श्रुतेः।

गन्धद्रव्याणि सर्वाण्यपि सुचित्तहस्तेन आचारलिंगार्पणीयानि। षड्रसा अपि सुबुद्धिहस्तेन गुरुलिंगार्पणीयानि। रूपद्रव्याणि सर्वाण्यपि सावधान हस्तेन शिवलिंगार्पणीयानि। शीतोष्णस्पर्शादीनि कारणहस्तेन जंगमलिंगार्पणीयानि। सुशब्दादयस्सुमानसहस्तेन प्रसादलिंगार्पणीयानि। सुखदुःखमोहममकारादयस्सर्वेपि सुज्ञान हस्तेन महालिंगार्पणीयानि।

अथ षट्सु लिंगेषु कर्तव्याष्षड्भक्तयः
सद्भक्तिः, नैष्ठिकभक्तिः, अवधानभक्तिः, अनुभवभक्तिः, आनन्द भक्तिः, समरसभक्तिश्चेति ।

### तत्र मुखानि

सद्योजातादि चिदम्बरान्तानि षट् ।
इमान्येव अङ्गहस्तलिंगमुखद्रव्याणि ।
इति लिंगेन्द्रिय लिंग प्राणलिंग मनुगतयो वदन्ति ।

### अथ पुरुषनिर्णयः

क्षराक्षरकूटस्थक्षेत्रज्ञ पूर्णानन्दा पंचपुरुषाः ।

### अथान्तःकरण निर्णयः

अहङ्कारचित्तबुद्धिमनोज्ञातारः ।

### अथ गायत्रीनिर्णयः

गायत्री सावित्री सरस्वती तुर्याब्रह्माभिधाः ।

### अथ वेदाः

ऋग्यजुस्सामाथर्वण सूक्ष्माभिधाः ।

### अथ वर्णोत्पत्तिनिर्णयः

स्थूलदेहः – बाह्यत्रिपुटी रक्तवर्णा, अन्तस्त्रिपुटी पीतवर्णा, उभयसम्मेळनाद्रक्त पीतवर्णम् ।

सूक्ष्मांगम् – बहिस्त्रिपुट्याश्श्वेतवर्णं, अन्तस्त्रिपुट्या कर्बुरवर्णम्, उभयसम्मेळनात् श्वेतकर्बुरवर्णम्।
बहिस्त्रिपुट्याः कृष्णवर्णं, अन्तस्त्रिपुट्याश्श्यामवर्णम्, उभयसम्मेळनात् कृष्णश्यामवर्णम्।
महाकारणांगम् – बहिस्त्रिपुट्याः नीलवर्णं, अन्तस्त्रिपुट्याः सुनीलवर्णम्, उभयसम्मेळनान्नील सुनीलवर्णम्।
कैवल्यदेहम् – बहिस्त्रिपुट्याः दीपवर्णं, अन्तस्त्रिपुट्याः पीतवर्णम्, उभयसम्मेळनाद्दीप पीतवर्णम्।

## अथ मूलोड्डीयमाण जालन्धरबन्धाः

आद्यमध्यपटुत्व भावार्हाः

इडा पिंगळा सुषुम्नाः गंगायमुना सरस्वत्योत्रस्थिताः तानि स्थानानि। अथ रेचक पूरककुम्भकाः दशेन्द्रिय निरोधक ज्ञानकर्म समानयोगाः अथवा अघोहं स्वाव्यञ्जनातीतस्थलाति सूक्ष्मरन्ध्रे भावात्मकवायुलयः अथवा शून्याशून्यपद ज्ञानं केवलकुम्भकः।

## हंसस्याष्टवृत्तयः

पूर्वदळे पुण्यो भवति आग्नेयेत्वलसादयो भवन्ति। याम्ये क्रौर्या मतिः नैरृत्यां पापमनीषा, वारुणे क्रीडा, वायव्ये गमनागमनादौ बुद्धिः कौबेर्यां रतिप्रीतिः, ईशान्ये द्रव्यादानम्, मध्ये वैराग्यम्, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नम्, लिंगे सुषुप्तिः, पद्मत्यागे तुरीयम्, अथ हंसो नादे विलीनो भवति। तत्तुर्यातीतम्।

अधोनादमूर्ध्नि ब्रह्मरन्ध्र पर्यन्तं शुद्धस्फटिक संकाश एव ब्रह्म परमात्मेत्युच्यते।

इति श्रीमत्परमहंस परिव्राजकाचार्य श्रीमज्जगद्गुरु शङ्कराचार्य विरचित सांख्यसूत्रनिर्णयस्समाप्तः।

हरिः ॐ तत्सत्

कपिलाचार्यसांख्यचक्रमेतत्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ब्रह्म रन्ध्रपीठम् | आकाश तत्वम् | ज्ञातैव जीवः 11 | समानः 2 | श्रोत्रम् 2 | शब्दः 2 | वाक् | पराशक्तिः |
| ओंठपीठम् | वायु तत्वम् | मनः 2 | व्यानः 11 | त्वक् 2 | स्पर्शः 2 | पाणिः | आदिशक्तिः |
| गोल्हाठ पीठम् | तेजस्त त्वम् | बुद्धिः 2 | उदानः 2 | चक्षुः 11 | रूपम् 2 | पादः | ज्ञानशक्तिः |
| हर पीठम् | अप् तत्वम् | चित्तम् 2 | प्राणः 2 | जिह्वा 2 | रसः 11 | गुह्यम् 2 | इच्छा शक्तिः |
| त्रिकूट पीठम् | पृथिवी तत्वम् | अहं कारः 2 | अपानः 2 | घ्राणम् 2 | गन्धाः 2 | पायवः 11 | क्रिया शक्तिः |

# ऋणम्



ऋणं ऋणं ऋणम्
दीयते ऋणं आदीयते ऋणम्
प्रार्थ्यते ऋणं निष्पाद्यते ऋणम् ॥
कृशाय ऋणं पापाय ऋणम्
गोपाय ऋणं कोपाय ऋणम् ।
कृषिकाय ऋणं चषकाय ऋणम्
श्रमाय ऋणं विश्रामाय ऋणम् ॥
अधनाय ऋणं सधनाय ऋणम्
दीनाय ऋणं पानाय ऋणम् ।
वणिजे ऋणं भिषजे ऋणम्
गृहाय ऋणं ग्लहान ऋणम् ॥
न निर्यात्यं ऋणं न पर्याप्तं ऋणम्
न परस्वं ऋणं स्वकरस्थ तृणम् ।
जातिधनं स्वऋणं कोवादण्डयेत्पणम्
कथं वा भवेत् प्रत्यर्पणं तत् यथाशक्ति गृहाण ऋणम् ॥



# भारतं - भारती



भारतदेशे भारतशब्दस्य नानार्थाः प्ररूढाः सन्ति । तत्र (1) भारतं नाम देशः । यथा –

"उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम; भारती यत्र सन्ततिः" ॥

इति विष्णुपुराणोक्तरीत्या हिन्दु-महासागरस्य उत्तरतः हिमालयात् दक्षिणतः पूर्वापरौ वारिनिधी विगाह्य विराजमानं भूमण्डलमेव भारतवर्षं इति सिद्धम् । अत्रत्या जना एव भारती सन्ततिः । एवं च "भारतं" इति देशे "भारती" इति तत्सन्ताने च निरूढम् ।

भारतशब्दः भरतशब्दात् व्युत्पादितः । भरतशब्दवाच्यः नैकोऽर्थः । तत्राऽपि नानार्थाः सन्ति । पुराणेतिहास प्रसिद्धः भरतः - स्वायंभुव-मनुवंशे प्रैयव्रतस्य (प्रियव्रत-पुत्रस्य) आग्नीध्रस्य नप्ता, नाभेः पौत्रः ऋषभस्य पुत्रः; अयं महीपतिः । अस्य पिता ऋषभवनं प्रतिष्ठन् पुत्राय इदं भूमण्डल मदात् । यथा –

"भरताय यतः पित्रा दत्तं प्रतिष्ठिता वनम् ।
ततश्च भारतं वर्षमेतल्लोकेषु गीयते ॥"

इत्यपि पुराणेतिहास निर्वचनं स्मर्यते । तथा च अस्य देशस्य भारत-मिति नाम राजकीयं पुराणप्रसिद्धम् च । तदुपज्ञा प्रजा भारती इति च व्यवहृता ।

स एव महीपतिः भरतः अन्ते साल्ग्राम निवासी सन् मुमुक्षु

भगवच्चिन्तनपरोऽभूत् । मुमुक्षुरपि स राजर्षिः संगदोषेण मृगजन्म लेभे । जातिस्मरत्वात् पश्चात्तप्तः तत्रैव सालग्रामे मृग-जीवितं अनुभूय जन्मान्तरे द्विजो बभूव । सोऽपि जातिस्मरतया जडवत् अजीवत् । सौवीरनरपतेः शिबिकां वहन् तस्मै अध्यात्मतत्त्वमुद्दिश्य अन्ते मुक्तोऽभवदिति पुराणेतिहासः । एक एव भरतः - महीपतिः, मृगः, महीसुरश्चेति त्रिजन्मशुद्धो बुद्धो (बद्धो न) मुक्तश्च बभूव ।

तथा च ऋषभपुत्रो महीपतिः कश्चिद्भरतः, स एव जन्मान्तरे जडभरत इति महीसुरः । दुष्यन्तपुत्रः अपरः कश्चिद्भरतः । परन्तु ऋषभ-पुत्रस्य नाम्नैव अस्य देशस्य भारतमिति नाम निष्पन्नं इत्यत्र न कोऽपि संदेहः ।

(2) अथ "भारती" शब्दविचारः । "भरतस्य इयं भारती" "भारती यत्र संततिः" इति भरतप्रजा प्रथमोऽर्थः । द्वितीयोऽर्थः "भारत-प्रजावाणी" । "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इति अमरकोशात् "भारती" शब्दस्य भाषासामान्यवाचित्वमुक्तम् । अनेन भारती शब्दस्य अतिप्राचीनता द्योतिता ।

(३) अथ "भारत" शब्दविचारः । भरतस्य अयं भारतः इति पुंलिङ्ग-भरतस्य इदं भारतं इति नपुंसकलिङ्गं च सिध्यति । भरतवंशोत्पन्नः भारतः "तस्माद्युध्यस्व भारत" इति स्मर्यते गीतायाम् । "वर्षं तद्भारतं नाम" इति भारतमिति पदं देशवाचकम् । "मन्वादि भारतं केचित्" इति इतिहासवाचकं, काव्यमपि इदं भारतमिति पदम् ।

एवं च भरतशब्दात् निष्पन्नं भारतः-भारतं भारती इति पदत्रयं अस्मद्देशस्य परम्परायाः साहित्यस्य संस्कृतेश्च अतिप्राचीनतां द्योतयति ।

"जयतु भारतं, जयतु भारती"

न्यायमाला ५

# अन्ध-दर्पण न्यायः

अन्धस्य दर्पणं वृथा। दृष्टिशक्तियुक्तस्यैव आदर्शः प्रयोजनकारी भवति। दृष्टिविहीनस्य दर्पणं कथं वा तन्मुखदर्शकं स्यात्? दर्पणस्य तु कार्यं पुरस्थितवस्तुप्रदर्शनम्। न ह्ययम् दर्पणस्य अपराधः यदन्धो न स्वमुखं पश्यतीति अतः क्वचिल्लोपः अन्यत्र निरर्थकतां ज्ञापयति, न तु सर्वत्र सर्वस्य। दर्पणं तु स्वतः सार्थकमेव।

एवमेव बधिरशंखाराव न्यायोऽपि सिद्धः। बधिरस्य शङ्खारावः न श्रुतिपथं गच्छति। एवं निरर्थकतां ज्ञापयन्तो न्यायाः बहवस्सन्ति। अस्य अन्धदर्पणन्यायस्य एतादृशानां अन्येषां वा समेषां न्यायानां तात्पर्यं तु "क्वचित्सार्थक्येऽपि अत्र वैयर्थ्यं अनिवार्यमेव" इत्यस्मिन्नंशे एव। इदं वस्तुतत्वम्।

यद्यत्र निरर्थकम् तत्तत्र सदप्यसत्प्रायम्। सीता रावणं प्रति "इह सन्तो न वा सन्ति सतो वा नानुवर्तसे" इति। सतां अभावः, सत्वेऽपि वा तेषां नानुसरणं उभयमपि तुल्यम्। अतः अन्धदर्पणं असत्कल्पम्। असत्कल्पं वा निरर्थकं वा यत्र यत्र प्रसक्तो भवति तत्र सर्वत्राऽपि अस्य वा एतादृशस्य न्यायस्य प्रसारो भवति।



# आन्ध्रप्रदेशे उपाध्यायाः

"अवरः"

गौरवस्थानं बहोः कालात् भारते सभाजनीयतामेव अधिगतमस्ति। परन्तु कालगतिमनुसृत्य उपाध्यायानां जीवितानि गौरवप्रतिपत्तयः इत्यादिकं सर्वं सेवा क्षेत्राधीनं सत् परिवर्तमानं अस्ति।

अन्य सेवा क्षेत्रेषु यादृशी कालानुगतिः दरीदृश्यते सा विद्या क्षेत्रेऽपि उपाध्यायानां विषये दूरीकर्तुं न शक्यते। परिवर्तमाने समाजे उपाध्यायानां परिस्थितिरपि परिवर्तनशीला भवत्येव। राजकीयं वा आर्थिकम् वा सामाजिकं वा प्रभाव प्राप्नुवन्त्येव काले काले सर्वाण्यपि सेवा क्षेत्राणि, सत्येवं उपाध्यायानां वर्गा अपि तत्तत्प्रभावापेताः सुदूरं पूर्ववत् गुरुकुल प्रशान्तजीवनं अनुभवितुं न पारयन्ति इदानीन्तनकाले। देशे सर्वेऽपि सेवा संघाः परस्पराश्रिताः परस्पर प्रभावभाविताश्च भवन्ति। अतः उपाध्यायवर्गा अपि संघ-शक्ति मुपजीव्य स्वयोगक्षेमविधानं निरूपयन्ति।

अधुनातनकाले सर्वा अपि नीतयः अर्थनीतिमुपजीवन्तीति बहुमतं प्रचलति। कुटुम्बादारभ्य-केबिनेट्-पर्यन्तं अहन्यहनि नीतिचक्रं परिभ्रमत्येव। आन्ध्रोपाध्यायानां मार्चमासे प्रवर्तितः कार्यबन्धः-कार्यविरमणरूपः कार्यनिरतिमेव द्योतयतीति मन्ये। आन्ध्रप्रदेशसर्वकारोऽपि अनेन कार्यबन्धेन कोपोद्रिक्तो नभूत्वा प्रसन्नयैव वाचा मत्या नीत्या च यथोचितं प्रावर्तत। अशेषा उपाध्यायवर्गाः यथापूर्वं कार्यबन्धन-कार्यनिरतिरूपेण स्वस्थास्संवृत्ता इव। सामुदायिकी उपाध्यायसमस्या शान्तप्राया। सर्वकारोऽप्यस्मिन् विषये अभिनन्दनीयो विराजते।

उपाध्यायेषु भाषा पण्डिताः स्वेतरोपाध्यायैः सह सामान्यप्रतिपत्तिमनुभवितुमीहन्ते इति अयमंशः नाद्यावधि परिष्कृतप्रायः । विशिष्य संस्कृत-सहयोग्यतया शोभमानाः भाषापण्डिताः निर्निबन्धं सामान्यप्रतिपत्तिरित्येव न, अपितु विशेषप्रतिपत्तिरित्यस्याऽपि योग्या, योग्यतरा योग्यतमाश्च भूयासुरिति न मम विवक्षा-महदाशीः । विद्याधिकारिणः विद्यामन्त्रिणः इममंशम् मनसि कुर्युश्चेद्वयं नमस्कुर्मः ।



श्रीसाधारण - उगादि शुभाकांक्षाः

*

विद्याप्रवीणः शास्त्री (शिक्षा) साहित्यसुधाकरः

प. वें. नरसिंहाचार्यः,

पोन्नूरु,

साहित्यसंगीत कळासु वृद्धिं
धाराभिवृष्टेः फलसस्यराशीः ।
रक्तिं च देशे सकलेषु कुर्वा-
णस्स्यादसौ नः कृतकाम्यसिद्धिः ॥

## गैर्वाणीपाठकेषु विज्ञापनम्

पठितृवर्गाः, अस्याः भवत्प्रियतमपत्रिकायाः अष्टमो वर्ष अनुवर्तते। एतावन्तं च कालं धनसंकटे सहाय्यन्यूनतायां च यावच्छक्ति प्रकाश्यमाना इयं छंदप्रदानां तदितरेषां च विदुषां संस्कृतप्रेमिणां करकमलमलंकरोति नाविदितं भवताम्। भारतसर्वकारः अत्र विषये अभिनन्दनार्हो यः अस्या यत्किंचित्पाथेयं अर्पयति काले काले। अथापि पत्राणां मूल्यस्य मुद्रणादि व्ययानां च अत्यधिककोटिं आसादयति अस्मिन् काले एवमेव पत्रिकानिर्वहणं दुर्भरं भवतीति निर्लज्जं विज्ञाप्यते। कतिचन महानुभावाः इंगितज्ञाः स्वकीयं छन्दं अस्मद्विज्ञापना मनपेक्ष्यैव प्रैषयन्। अथापि बहवः अस्मद्विज्ञापनामपेक्षन्त एव। पोस्टलव्ययस्य भरणे अशक्त्या इदं सर्वानुद्दिश्य विज्ञाप्यते यत् कृपया ग्राहकास्सर्वेऽपि यथोचितं छन्दं रूप्यचतुष्टयात्मकं तदधिकं वा संप्रेष्य एतज्जीवने साह्यमाचरेयुरिति।

प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री.

—★—

## परीक्षानियमावलिः

पण्डितवर्गाः, पाठयितारः, पठितारश्च,
एतत्सभीया परीक्षाणां परिचयाभिज्ञविचक्षणसमर्थकोविदनाम्नीनां
पाठ्यपुस्तकानि 1970 संवत्सरीयाण्येव 1972 मार्च (कुम्भ)
मासपरीक्षापर्यन्तं अनुस्यूतानि भवेयुः। 1970
परीक्षानियमावल्येव 1972 मार्चपर्यन्तं
अनुसरणीयेति विज्ञापयति।

15–4–70
सं. भा. प्र. सभा,
चित्तूरु.

की॰ श्रीनिवासाचार्यः,
परीक्षामन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
R. N. 8145/60. Postal R. No. H. 493.

# गैर्वाणी

भारतसर्वकारेण पुरस्कृता च

वार्षिकम् रू. ४-००

## प्रहेलिके

विना यौवनमार्गेण गच्छन्तौ लपितं मया ।
हरेः कृत्यं दर्शयतां पश्येत्युक्ते न दृश्यते ॥

अर्थः – विना गरुत्मता पक्षिणा; वनमार्गेण जलमार्गेण क्षीराब्धावित्यर्थः, यौ गच्छन्तौ (स्तः) (एवं अत्र वाक्ये) मया लक्ष्म्या उपलक्षितस्य, हरेः विष्णोः कृत्यं लीला, लपितं भाषितं, (तौ) पश्य इति दर्शयतां, उक्ते वचने, न दृश्यते मूढैः सूचितार्थो न ज्ञायते ।

रामरामेतिरामेति रमे रामे मनोरमे ।
सहस्रनामतत्तुल्यं रामनाम वरानने ॥

अर्थः – हे वरानने पार्वति, अतिरामे अतिक्रान्ता रामा येन सः अतिरामः तस्मिन् शुद्ध ब्रह्मणि, मनोरमे मनसः आनन्ददायके, रामे, रामराः राम एव राः धनं यस्य सः तथाभूतोहं, अतिरमे अत्यन्तं क्रीडामि, यतः मे मम, रामनाम, सहस्रनाम तनोतीति सहस्रनामतत् विष्णुसहस्रनाम-शुभ्रकं, तुल्यं अत एव सहस्रनामसदृशं भवति ।

Published by Sri N Ramanatha Iyer B. A., B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500